पतिना तानधिकानसुरानभ्यभवत्। तस्मादेव षोडशी अभवत्त्वयज्ञ इति य एवं वेद जानाति, स वेदिता कनीयस्वी अल्पीयानपि भूयसि नं अधिकं भ्रातृव्यं शत्रुं वृङ्क्ते वर्जयति ॥ ३१ ॥

अथ यदुक्तं सूत्रकारेण 'हविर्धाने गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य' इति तन्मन्त्रविहितमवेक्षणं विधत्ते—

"यस्मादन्यो न परो ऽस्ति जातो य आवभूव भुवनानि विश्वा। प्रजापतिः प्रजया सम्विदानस्त्रीणि ज्योतींषि सचते स षोडशी"त्युद्गाता ग्रहमवेक्षते ॥३२॥

यस्मात्प्रजापतेस्सर्वकारणभूतादन्यो व्यतिरिक्तो परो जात उत्पन्नो नाऽस्ति,यश्च विश्वानि सर्व्वाणि भुवनानि भूतजातानि आवभूव (१)कारणात्मना व्याप्तोऽभूत्। भूप्राप्ताविति धातुः। स प्रजापतिः, प्रजानामीश्वरो देवः प्रजया आत्मीयया, सामान्याभिप्रायमेकवचनम्। स्वात्मनस्त्रष्टव्येन सर्व्वेण(२) कार्य्यजातेन सम्विदानः ऐकमत्यं गच्छन् त्रीणि ज्योतींषि चन्द्रसूर्य्याग्निरूपाणि, अथवा गार्हपत्यदक्षिणाग्न्याहवनीयात्मकानि तेजांसि सचते व्याप्नोति। स एव प्रजापतिः षोडशी षोडशिग्रहात्मना कार्य्यरूपेण वर्त्तत इति मन्त्रार्थः। अनेन मन्त्रेण उद्गाता खरे आसादितं षोडशिग्रहमवेक्षते ॥ ३२ ॥

एतद्वेदनं प्रशंसति—

ज्योतिष्मानस्य षोडशी भवति य एवं वेद ॥ ३३ ॥

स्पष्टमेतत् ॥ ३३ ॥

अथ पूर्ववदेतस्मिन् स्तोत्रे स्तोमक्लृप्तिं विधाय (३)स्तौति—

एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति॥३४॥

पूर्वेषु स्तोत्रेषु यः स्तोमो विहितः स एवैकविंशोऽस्याऽपि स्तोत्रस्य स्तोमो भवति प्रतिष्ठायै प्रतिष्ठानार्थम्। अत एतेनैकविंशेन स्तोमेन (४)स्तुतेन यजमानः प्रतितिष्ठति ॥ ३४ ॥

---

१. कारणत्वेनेति. क. पु.  २. कर्मजातेने ति क. पु.
३. प्रस्तौतीति. क. पु.  ४. कृतेनेति. क. पु.

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूप
साम्राज्यधुरन्धरेण (१)सायणाचार्येण विरचिते माधवीये सामवेदा
प्रकाशे ताण्ड्यमहाब्राह्मणे द्वादशाध्यायस्य त्रयोदशः खण्डः ॥
द्वादशाध्यायः समाप्तिमगमत् ॥



१. सायणामात्येनेति क. पु.